रागद्वेपवियुक्तैस्तु विपयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥
प्रसादे सर्वदु खाना हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धि पर्यवतिष्ठते ॥ ६५ ॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयत शान्ति अशान्तस्य कुत सुखम् ॥ ६६ ॥
इन्द्रियाणा हि चरता यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञा वायुर्नावमिवाम्भसि ॥ ६७ ॥
तस्माद् यस्य महाबाहो निगृहीतानि सर्वश ।
इन्द्रियाणीन्द्रियार्थेभ्य तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥
या निशा सवभूताना तस्या जागर्ति सयमी ।
यस्या जाग्रति भूतानि सा निशा पश्यतो मुने ॥ ६९ ॥

आपूर्यमाणम अचलप्रतिष्ठम्
समुद्रमाप प्रविशन्ति यद्वत् ।
तद्वत् कामा य प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥७०॥

विहाय कामान् य सर्वान् पुमाश्चरति नि स्पृह ।
निर्ममो निरहकार स शान्तिमधिगच्छति ॥ ७१ ॥
एपा ब्राह्मी स्थिति पार्थ नैना प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७२॥

इति श्रीमदभगवद्गीतासु उपनिपत्सु ब्रह्मविद्याया योगशास्त्र श्रीकृष्णार्जुनसवादे सांख्ययोगो नाम द्वितीयोऽध्याय ॥ २ ॥

---

Y D, ७२ (च० ४) ब्रह्मनिर्वाणमृच्छति ।
समाप्ति ‑ ‑ ‑ व्योग नाम इंद्रियसंयमयोग नाम स्तुतिक नाम (द्वितीयोऽध्याय )